

SAPTHAGIRI (SANSKRIT)
SPIRITUAL ILLUSTRATED MONTHLY
Volume:10, Issue: 07
October-2023, Price Rs.20/-
No. of pages-24

तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

आध्यात्मिकसचित्रमासपत्रिका

अक्टोबर् - २०२३ रू. २०/-

तिरुमल

## श्रीवेङ्कटेश्वरस्वामिनः नवरात्रि ब्रह्मोत्सवाः

2023 अक्टोबर् 15 तः 23 पर्यन्तम्

# तिरुचानूरु श्री पद्मावतीदेव्याः ब्रह्मोत्सवाः

## 2023 नवम्बर् 10 तः 18 पर्यन्तम्

**१०-११-२०२३ भृगुवासरः**
प्रातः - ध्वजारोहणम्
रात्रौ - लघुशेषवाहनम्

**११-११-२०२३ मन्दवासरः**
प्रातः - महाशेषवाहनम्
रात्रौ - हंसवाहनम्

**१२-११-२०२३ भानुवासरः**
प्रातः - मौक्तिकमण्डपम्
रात्रौ - सिंहवाहनम्

**१३-११-२०२३ इन्दुवासरः**
प्रातः - कल्पवृक्षवाहनम्
रात्रौ - हनुमद्वाहनम्

**१४-११-२०२३ - भौमवासरः**
प्रातः - पल्लक्युत्सवः
सायं - वसन्तोत्सवः
रात्रौ - गजवाहनम्

**१५-११-२०२३ सौम्यवासरः**
प्रातः - सर्वभूपालवाहनम्, स्वर्ण रथोत्सवः
रात्रौ - गरुडवाहनम्

**१६-११-२०२३ बृहस्पतिवासरः**
प्रातः - सूर्यप्रभवाहनम्
रात्रौ - चन्द्रप्रभवाहनम्

**१७-११-२०२३ भृगुवासरः**
प्रातः - रथोत्सवः
रात्रौ - अश्ववाहनम्

**१८-११-२०२३ मन्दवासरः**
प्रातः - चक्रस्नानम्
पञ्चमीतीर्थ
रात्रौ - ध्वजावरोहणम्

# गीतामृतम्

श्रीभगवानुवाच -

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति।।

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत।।

(भगवद्गीता २-१३-१४)

श्रीभगवान् उक्तवान् हे अर्जुन!

भावः - श्री कृष्णः उक्तवान् - हे भरतवंशोद्भव! कुन्तीपुत्र! अर्जुन! प्राणिनां देहे बाल्यावस्था अनन्तरं यौवनावस्था ततः वार्धक्यावस्था भवति। तथैव प्राणिनां जन्मान्तरेषु अन्यत् शरीरं भवति। परन्तु एताभिः अवस्थाभिः विकाराः देहस्य एव, न तु देहवतः जीवात्मनः। बाल्याद्यवस्था सदृशी एव, देहान्तरप्राप्तिः। एतद्विषये धीरः दुःखं न प्राप्नोति। इन्द्रियाणां रूपरसगन्धादिविषयैः सह सम्बन्धेन शीतं, उष्णं, सुखं दुःखं च भवन्ति। तानि च आगच्छन्ति, गच्छन्ति च, अतः अनित्याः भवन्ति। तानि सोढव्यानि, तानि सहस्व।

## सङ्कीर्तनम्

नवनीतचोर नमो नमो
नवमहिमार्णव नमो नमो ।।नव।।

हरिनारायण केशवाच्युत श्रीकृष्ण
नरसिंह वामन नमो नमो



मुरहर पद्मनाभ मुकुन्द गोविन्द
नरनारायणरूप नमो नमो ।।नव।।

निगमगोचर विष्णुनीरजाक्ष वासुदेव
नगधर नन्दगोप नमो नमो
त्रिगुणातीत देव त्रिविक्रम द्वारक
नगराधिनायक नमो नमो ।।नव।।

वैकुण्ठ रुक्मिणीवल्लभ चक्रधर
नाकेशवन्दित नमो नमो
श्रीकर गुणनिधि श्रीवेङ्कटेश्वर
नाकजननुत नमो नमो ।।नव।।

(अन्नमाचार्यसङ्कीर्तनम्)

सम्पादकीयम्

# जगत् कल्याणोत्सवाः

भारतीयसनातनधर्मस्य संस्कृतेश्च प्रतिरूपतया देवालयाः शोभूयन्ते। भक्त्या भगवदाराधनं संस्कृतिरस्माकम्। भगवान् देवः च ''वेङ्कटेशसमो देवो न भूतो न भविष्यति'' इत्युक्तदिशा श्रीवेङ्कटेश्वरः एव। अस्य समः देवः, तिरुमलस्य समं क्षेत्रं च नास्ति एव।

लोकस्य विविधस्थानेभ्यः भक्ताः अभीष्टसिद्ध्यर्थं तथा भगवद्दर्शनाय च आसंवत्सरं तिरुमलक्षेत्रम् आगच्छन्ति। क्षणमात्रकाले भगवतः दर्शनेनापि ते मार्गे अनुभूतान् क्लेशान् विस्मरन्ति। ते देवस्थाने प्रचलिते प्रत्येकस्मिन्नपि कार्यक्रमे स्वपरिधीन् उल्लङ्घ्य सम्मिलितुम् इच्छन्ति। भक्तानां संख्या बृहत्तमा इत्यस्मात् तेषां क्लेशपरिहाराय तिरुमलतिरुपतिदेवस्थानं सर्वानपि कार्यक्रमान् अधितन्त्रद्वारा तत्समयं सम्प्रेषयति।

प्रतिवर्षम् आयोज्यमाणः सप्तगिरीणां सङ्गमोत्सवः ब्रह्मोत्सवः भक्तानां कृते आनन्ददायको भवति। अस्मिन्नवसरे भगवन्तं श्रीवेङ्कटेशं सपरिवारं विविधवाहनेषु विराजमानं द्रष्टुम् अवकाशः लभ्यते। आश्वीजमासे आचर्यमाणः ब्रह्मोत्सवः आचर्यमाणेन नवरात्र्युत्सवेन साकं सम्मिलति इति अस्य वैशिष्ट्यं वर्धयति। श्री वेङ्कटेश्वरो दुःखकारकाणां नाशनं करोति, स्वभक्तान् कुशक्तिभ्यः रक्षति च।

तिरुमलदेवस्थानस्य ध्वजस्तम्भे गरुडध्वजारोहणेन ब्रह्मोत्सवस्य समारम्भो भवति। भगवतः वेङ्कटेश्वरस्य नगरपरिक्रमणात् पूर्वं सर्वसैन्याधिपः विष्वक्सेनः चतुर्णां माडपथाम् अवलोकनाय परिक्रमणं करोति। तदनन्तरं साक्षात् श्रीवेङ्कटेश्वरः विविधरथेषु प्रतिदिनं प्रातः, सायं च परिक्रमणं करोति, भक्तान् अनुगृह्णाति च। भगवतः रथयात्रा नयनानन्दप्रदायिनी वर्तते। अस्मिन्नवसरे भगवान् स्वयं भक्तरक्षणाय दर्शनप्रदानाय च तेषां मध्ये आगच्छन्नस्ति इति दृष्ट्वा भक्तानां नेत्रेभ्यः आनन्दबाष्पाः अनन्ततया प्रवहन्ति।

एवंभूतस्य ब्रह्मोत्सवस्य परिसमाप्तिः पुष्करिण्यां 'स्नपनतिरुमञ्जनम्' इत्यनेन समाप्तिं याति। 'चक्रत्ताल्वार्' इति देवप्रतीकात्मकस्य सुदर्शनचक्रस्य बिम्बं पुष्करिण्यां निमज्जयित्वा स्वीकुर्वन्ति। चक्रस्नानानन्तरं भगवद्ध्वजस्य अवरोहणक्रियया ब्रह्मोत्सवस्य परिसमाप्तिर्भवति।

श्रीनिवासप्रभुः अर्थिनां कल्पतरुः, मनोरथसिद्धिप्रदं दैवं भवति। तन्मयतया स्तोतॄणाम् आनन्दरूपं भूत्वा विराजते। तादृशस्वामिहृदये व्यूहलक्ष्मीनाम्ना महालक्ष्मीः विलसति। ततः एव सः श्रीनिवासो बभूव। ततश्च तिरुमलक्षेत्रे क्रियमाणा सर्वापि अर्चना सपदि हृदयलक्ष्मीसमर्चनासमेता भवति। तिरुमल क्षेत्रे स्थितोयं सम्प्रदायः। शरन्नवरात्रिषु वेङ्कटाचलक्षेत्रे यत्र भगवान् देवी च अभिन्नतया स्तः ब्रह्मोत्सवदर्शनेन भगवतः देव्याश्च अर्चनफलं लभ्यते। क्षेत्रपवित्रतायाः यथा भङ्गो न भवति तथा त्रिकरणशुद्ध्या क्षेत्रसम्प्रदायमनुसरामः। श्रीनिवासपरब्रह्मणः ब्रह्मोत्सवेषु पवित्रबुध्या सान्निध्यं भजामः। नित्यकल्याणचक्रवर्तिनः सप्तगिरीश्वरस्य सम्पूर्णानुग्रह पात्रं भवेम।

रथस्थं केशवं दृष्ट्वा इत्यादिवाक्याधारेण इदम् अवगम्यते ब्रह्मोत्सवेत्यादिषु रथारूढं भगवन्तं अवलोक्य पुनर्जन्मनः तरेम इति। अतः भगवद्विषयकोत्सवेषु सर्वत्रापि स्वकीयभक्तिनमनसेवादिकं समर्प्य भक्तभरं ऊढ्वा तृप्ताः भवेम, संसारेण जायमानदुःखेभ्यः त्राताः भवेम।

# अक्टोबर् २०२३

सम्पुटिः-१० सञ्चिका-०७

श्रीशोभकृत्संवत्सरस्य भाद्रपदकृष्णद्वितीया तः
श्रीशोभकृत्संवत्सरस्य आश्वयुजकृष्णतृतीया पर्यन्तम्-१९४४



मुखचित्रम् – तिरुमलक्षेत्रे, गरुडवाहने श्री मलयप्पस्वामी।
अन्तिमरक्षापुटः – तिरुचानूरु, श्री पद्मावतीदेवी।

**सङ्केतः**

प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०

सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org

एका पत्रिका : रू.२०/-
वार्षिकग्राहकत्वम् रू.२४०/-
आजीविक ग्राहकत्वम् रू.२४००/-

*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*

तिरुमलतिरुपतिदेवस्थानम्

# सप्तगिरिः

आध्यातिमकसचित्रमासपत्रिका





# शरन्नवरात्र वैशिष्ट्यम् अन्तरार्थः

''सारस्वत कलानिधि''
आचार्य वेलुवोलु नागराज्यलक्ष्मीः
चरवाणी - ९३९४११३८४८

**ओं इन्द्राणि पति सद्भाव पूजिते परमेश्वरि।**
**रूपं देहि जयं देहि यशो देहि द्विषोजहि।।**

भारतीय संस्कृत्याम् मातृमूर्तेः अतीव प्राधान्यं प्राशस्त्यं च अस्ति। आश्वयुज मासे जगज्जनन्याः नवरात्रिमहोत्सवाः भक्तजनाः अत्यन्त भक्तिभावेन आचरन्ति। भक्तजनानां, विशेषतः स्त्रीणाम् आनन्दोत्साहाः अम्बरम् स्पृशन्ति। देवी नवरात्र महोत्सवाः शरन्नवरात्र महोत्सवाः इति एते व्यवह्रियन्ते।

आश्वयुजमासे शुद्धप्रतिपत् तिथौ आरभ्य शुद्धनवमी तिथि पर्यन्तम् आगमोक्त विधिना एते उत्सवाः समाचर्यन्ते। अनन्तरं विजयदशमी पर्वदिनम् अङ्गरङ्ग वैभवेन आचरन्ति। एते महोत्सवाः सृष्टिस्थितिलयकारिण्याः भुवनेश्वर्याः माहात्म्यम् प्रकटीकुर्वन्ति।

जगन्माता ललिता परमेश्वरी नवविध रूप अलंकारैः दर्शनम् ददाति। अस्मिन् नवविध रूपेषु मानवानाम् क्रमाभिवृद्धिः नवविध अवस्थासु भविष्यतीति विद्वांसः वदन्ति। नवदशाः अतिक्रम्य साधकः (मानवः) विजयं प्राप्नोति। तस्य विजयस्य प्रतीका सङ्केतं विजयदशमी पर्वदिवसम् इति सम्प्रदायः।

**१. बाला त्रिपुरसुन्दरी : -** नवरात्रमहोत्सवानां प्रारम्भ दिवसे परमेश्वरी बालात्रिपुरसुन्दरी अलङ्कारेण आराध्यते। मनुष्याः तेषाम् साधन प्रक्रियायां प्रथमतः अस्मिन् अलङ्कारे दिव्यजननीं दृष्ट्वा योग साधनं प्रति उपक्रमति इति अन्तरार्थः।

''बाला लीला विनोदिनी, बाला विक्रम नन्दिता'',
इति ललिता सहस्र नामसु वेदव्यासेन कीर्तिता।

**२. महालक्ष्मीः -** शरन्नवरात्र उत्सवेषु द्वितीय दिवसे जगन्माता महालक्ष्मी रूपेण भक्तजनानां नेत्रोत्सवं जनयति। महालक्ष्मीः क्षीरसागरात् समुद्भूता। सम्पत्स्वरूपिणी। निखिल लोकस्य अष्टैश्वर्याणि अनुगृह्णाति द्वाभ्यां भद्रगजाभ्याम् द्वयोः पार्श्वयोः अभिषेक रूपेण महालक्ष्मीः नित्यं पूज्यते। अत्यन्त सौभाग्यदायकम् एतत् दृश्यम् इति भावयन्ति भक्तजनाः।

**शुद्धलक्ष्मीः मोक्षलक्ष्मीः जयलक्ष्मीः सरस्वती**
**श्रीलक्ष्मीः वरलक्ष्मीः च प्रसन्ना मम सर्वदा''**

इति भक्तजनाः प्रस्तुवन्ति।

**३. गायत्री : -** गायत्री वेदमाता इत्यधीयते। शरन्नवरात्रिषु तृतीय दिवसे जगदम्बा गायत्री अलङ्कारेण नयनानन्दं करोति। सन्ध्योपासन वेलायां गायत्री मन्त्रः अधिक प्राधान्यं वहति।

गायत्रीमातुः पञ्चमुखानि दशहस्ताः सन्ति। साधकानां सकल कार्यार्थसिद्धिं प्रसाद रूपेण प्रयच्छति गायत्री माता।

न गायत्र्याः परदैवतम् इति भक्तजनाः भावयन्ति।

**४. अन्नपूर्णा -** वरद, अभय मुद्राभ्याम् अन्नपूर्णा अलङ्कारेण भुवनेश्वरी नवरात्रि महोत्सवेषु पञ्चम दिवसे दर्शनं ददाति। सकललोकानाम् आहारम् अनुगृह्णाति अन्नपूर्णा। न केवलम् अन्नप्रसादं किन्तु ज्ञानभिक्षामपि वात्सल्येन अनुगृह्णन् लोकान् रक्षति अन्नपूर्णा।

अन्नदा वसुधा वृद्धा। ब्रह्मात्मैक्य स्वरूपिणीम् इति ललिता सहस्रनामसु वेदव्यासः उक्तवान्।

**५. सरस्वती : -** सरस्वती नाम समस्त ज्ञानस्वरूपिणी मानवानां विद्या, समुन्नत व्यक्तित्वं च अनुग्रह रूपेण वरं ददाति। ''सर्वशुक्ला सरस्वती'' इति लोक प्रसिद्ध व्यवहारेण सरस्वती श्वेतवर्णा, श्वेताम्बरधारिणी च। नवरात्रि महोत्सवेषु मूलानक्षत्र शुभ सन्दर्भे जगदीश्वरी सरस्वती रूपेण आराध्यते। शारदा, वाग्देवी इत्यादि नामभिः अपि भक्त जनाः पूजयन्ति।

ओं प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती धीनाम विच्यवतु - इति ऋग्वेदस्य प्रथम सूक्ते उक्तम्। मातः सरस्वति! अत्यन्त वेगवत्याः त्वया अस्मान् निरन्तरम् रक्षतु। अस्माकं बुद्धिं च रक्षतु इति तत् सूक्ते ऋषयः प्रार्थितवन्तः।

**६.ललितादेवी : -** ललिता देवी साधक जनानां कार्यसिद्धिम् अनुग्रहं ददाति। चतुर्भुजैः पाशम् अङ्कुशं वहति। महालक्ष्मीः, महासरस्वती ललिता देव्याः द्वयोः पार्श्वयोः स्थित्वा ललितादेवीं पूजयतः।

**७. दुर्गादेवी : -** दुर्गा माता व्याघ्रं वाहनं कृत्वा शङ्खं चक्रम् अपि च कमलं निरन्तरं धरति। भक्त जन हृद्गत अहङ्कारं राक्षसत्वं च निर्मूल्य तान् पवित्रीभूतान् करोति।

''दुष्टदूरा दुराचार शमनी दोषवर्जिता'' इत्यादि नामभिः भगवान् वेदव्यास मुनीन्द्रः प्रस्तुतवान्। दुर्गाष्टमी इति एतत् पर्वदिनं सुप्रसिद्धम्।

**८. महिषासुरमर्दिनी : -** कामक्रोधादि दुर्गुण विनाशनं साधकस्य अत्यन्तं जीवन सार्थक्यम् इति माता बोधयति।

जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते। इति विशेषेण अम्बां स्तुवन्ति जनाः। एतत् पर्वदिनं महार्नवमीति उच्यते।

**९. राजराजेश्वरीः** नवरात्रि महोत्सवेषु महादेवी सम्प्रदाये राज राजेश्वरी देवी आराधनं महोत्कृष्टम्। अत्यन्त मुक्ति दायकं च। ललिता देव्याः महामन्त्रः पञ्चदशीति व्यवह्रियते। अस्मिन् मन्त्रे पञ्च दश अक्षराणि वर्तन्ते। एषः मन्त्रः एव कतिपय इतर बीजाक्षराणि समीकृत्य राजराजेश्वरी मन्त्रः भवति।

राजराजेश्वरी राज्यदायिनी राज्यवल्लभा इत्यादि नामभिः ललितासहस्रनामसु श्री माता प्रस्तुता।

**विजयदशमी -** मोक्षसाधकः मानवः नवविध दशाः साधयित्वा अन्तिम विजयं प्राप्स्यति। अतः अयं विजयदशमीति व्यवह्रियते।

कालः ईश्वर स्वरूपम्। ईश्वरः अर्धनारीश्वरः। अतः कालः स्त्रीपुरुषरूपात्मकः। वत्सरस्य प्रारम्भ ऋतुः पुंलिङ्ग रूपेण व्यवह्रियते। तथैव आश्वयुज मासात् आरभ्य फाल्गुण मास पर्यन्तं कालः स्त्री रूपात्मकः भवति। अतः अस्मिन् काले श्रीमातुः राजराजेश्वर्याः आराधना सनातन सम्प्रदायः। जगत्सर्वं शक्तिमयम्। एतत् परमेश्वरस्य विभूतिः। सर्वैः जनैः स्वार्थादि दुर्गुणान् परित्यज्य आदर्शमयं जीवनम् आचरणीयम् इति विजयदशमी पर्वदिवसस्य अन्तरार्थः।



## आगस्ट् २०२३
## लघुप्रश्नोत्तरी समाधानानि



१. सूर्य
२. जयविजयौ
३. यजुर्वेदे
४. बिल्वमङ्गळः
५. दूर्वासोमुनिः
६. अगस्त्यः श्रीरामस्य
७. तिरुवनन्तपुरे
८. ओं भूतात्मने नमः
९. भागवत माहात्म्ये
१०. बुध कौशिक मुनिः
११. सूर्यः
१२. अश्वत्थामा
१३. दूर्वासोमहामुनिः
१४. धुन्धुकारिः
१५. श्री महाविष्णुः



## भक्तकवयित्री मातृश्री

# तरिगोण्ड वेङ्गमाम्बा


डा. के.सूर्यनारायण रेड्डी
चरवाणी - ८१०६५७८२५०


स्त्रीषु भक्तिसाहित्यं सृष्ट्वा प्रसिद्धिं गताः नार्यः विरळा एव । विरळासु तासु तरिगोण्ड वेङ्गमाम्बा भगवदनुग्रहेण अद्भुत भक्तिसाहित्य कवयित्री भूत्वा आन्ध्रदेशे सुप्रसिद्धिं गता।

लक्ष्मीनृसिंहक्षेत्रत्वेन चारित्रकप्रशस्तिं प्राप्तः तरिगोण्डग्राम एव मातृश्री वेङ्गमाम्बायाः जन्मस्थानम् । अयं ग्रामः तिरुपति पुण्यक्षेत्रस्य वायव्यदिशि १०० कि.मी. दूरे वर्तते। तरिगोण्डवास्तव्याः नन्दवरशास्त्रीयाः वशिष्ठगोत्रीयाः। कानाल कृष्णयामात्य-मङ्गमाम्बानामकयोः उत्तमदम्पत्योः श्रीवेङ्कटेश्वरप्रसादरूपेण कवयित्रीयं वेङ्गमाम्बा क्रि.श.१७३० वत्सरे जनिं लेभे । सहजतया भक्तियुतेयम् । मुग्धभक्त्या तन्मयतया नाट्यगानैः उन्मत्तस्थितिमवाप्तेयम् आदौ पितरौ तोषयन्त्यपि पश्चात् निरुत्साहप्रदा आसीत् । तस्याः चेष्टाभिः विमुखौ तौ पितरौ तस्याः विवाहं कारितवन्तौ। परन्तु कतिपयवत्सरानन्तरमेव वेङ्गमाम्बायाः भर्ता दिवङ्गतः। पूर्वाचारमनुसृत्य विवाहितचिह्नानि मङ्गलसूत्रादीनि अपाकर्तुं सा नाङ्गीचकार। वेङ्कटाचलपतिरेव मम पतिदेवः इति अहं सुवासिनी सभर्तुकारूपेणैव, स्थास्यामीत्युक्तवती। अस्मिन् विषये पूर्वाचारपरायण प्रतिनिधिभूतं पुष्पगिरिपीठाधिपतिमपि वादे पराजितवती। ततः पुष्पगिरिपीठाधिपतिरपि वेङ्गमाम्बा नृसिंहोपासिका प्रह्लादांशविशिष्टा परमभक्तिमतीतीमां प्राशशंस। ततः वेङ्गगमाम्बा रूपान्तरावतारे सुब्रह्मण्यदेशिकगुरुमुखात् ब्रह्मविद्यां योगाभ्यासम् उपदेशपूर्वकतया समवाप। कदाचिन्मध्याह्ने योगाभ्यासानन्तरम् अर्धनिमीलतिनेत्राभ्यां स्थिता। तदा आकाशात् कानिचिद्बीजाक्षराणि दिव्यकान्त्या आगत्य तन्मुखे प्रविष्टान्यासन्। इमां दिव्यानुभूतिं स्वोल्लिखित-वेङ्कटाचलमाहात्म्यग्रन्थावतारिकायां प्रथमाश्वासे पद्यद्वये प्रकटीचकार। एवमान्ध्रसाहितीलोके अक्षरशारदा साक्षात्कारप्राप्तिमती, दैवानुग्रहमूर्तिः एकैक कवयित्री वेङ्गमाम्बैव। तदारभ्य वेङ्गमाम्बा स्वापूर्वाध्यात्मिकानुभवविशेषान् मधुरातिमधुराह्लादकरीत्या ''कवितैव तपः'' इति सूक्तिं सार्थकं कुर्वती रचनारूपेण आविष्कर्तुं प्रायतत।

इयं तरिगोण्ड नृसिंह शतकं, नारसिंहविलासकथा (यक्षगानं शिवनाटकं) राजयोगामृतसारः (द्विपदकाव्यं)

बालकृष्णनाटकं (यक्षगानं) इति कृतीः तरिगोण्ड ग्रामे एव व्यररचत् ।

इयं वेङ्गमाम्बा तरिगोण्डलक्ष्मीनृसिंहस्वामिनः देवालये पश्चिमदिशि आञ्जनेयस्वामिनः विग्रहसमीपे उपविश्य तदा तदा योगसमाधिनिमग्ना आसीत् । कदाचित् आलयार्चकः योगसमाधिनिमग्नायाः योगेश्वर्याः तस्याः शिरः केशान् धृत्वा तां दूरं पातयामास। एतदबाधाकरसंघटानान्तरमेव दैवप्रेरणया इयं कवयित्री तरिगोण्डग्रामं परित्यज्य अटवीमार्गद्वारा तिरुमल क्षेत्रं प्राप्तवती।

क्री.श.१७४५- ५० मध्ये हाथीरांजी मठस्य अधिपतिः महन्तुमहोदयः वेङ्गमाम्बायाः भक्तितत्परतां श्रुत्वा तस्याः श्रीस्वाम्यालयसम्बन्धिनम्, आश्रयमेकं कल्पयामास। आनन्दनिलयवासी भक्तप्रियः वेङ्कटेश्वरः वेङ्गमाम्बायाः आश्रितपारिजातमासीत् । भक्तिभावनाप्रेरिता सा कवयित्री पुनः रचनाकैङ्कर्यं प्रारब्धवती।

ताल्लपाकान्नमाचार्यवंशीयाः उत्तरमाडवीथ्यां स्वगृहसमीपे अल्पगृहं निवासार्थं वेङ्गमाम्बायाः दत्तवन्तः। अतः ताल्लपाकवंशकविरचना परिशीलनसदवकाशः भगवत्संकल्पादस्याः लब्धः। तेषु अन्नमाचार्याध्यात्मसङ्कीर्तन फणितिं श्रुङ्गारमञ्जरीम् अन्नमय्यपत्न्या तिम्मक्कया रचित - सुभद्राकल्याणम् अन्नमय्यपौत्ररचित-अष्टमहिषी कल्याणं स्वरचनासु सम्यगनुसृतवती। ''पूर्वकवीश्वरवन्दने वरलब्धान्नमाचार्यः'' इति नाम उट्टंकितवती। ततः वेङ्कट्रामदीक्षितार्चकात् - कांश्चित् क्लेशान् प्राप्य तुम्बुरुकोननामकारण्यं प्रविश्य गुहासु तीव्रतपः कृत्वा अपूर्वभगवत्साक्षात्कारानुभूतिं प्राप। ततः प्रभृति तस्याः निवासस्य वेङ्गमाम्बागुहेति व्यवहारः जातः। पश्चात्सा तुम्बुरुकोनात् तिरुमलालयसमीपमागतवती। वत्सरे, वत्सरे इयं भक्तकवयित्री नृसिंह - नवरात्रोत्सवान् निर्वहतिस्म। अस्याः भक्तिवेदान्तभावगर्भितरसार्द्ररचनामूलकतया आन्ध्रदेशे अस्याः कीर्तिः चतुर्षु कोणेषु व्याप्ता आसीत् ।

तदा अष्टघण्टकनाम्ना अष्टलेखका तस्याः रचनाः पत्रेषु स्थिरीकुर्वन्तः आसन् । परिसरप्रान्तवासिनः तस्याः कृतीः स्वीकृत्य प्रचारं कुर्वन्तिस्म ।

एवं मातृश्री वेङ्गमाम्बामठः तिरुमल क्षेत्र सन्दर्शनयोग्याध्यात्मिकसारस्वतकेन्द्रत्वेन विराजते स्म । अस्याः कवितातपस्विन्याः अमृतलेखिनीतः वेङ्कटाचलपुण्यक्षेत्रे बहिरागताः अनर्घकृतयः - १) विष्णुपारिजातम्, २) रमापरिणयः, ३) चेञ्चुनाटकम्, ४)श्रीकृष्णमञ्जरी, ५)रुक्मिणीनाटकम् ६) गोपिकानाटकम्, ७) वेङ्कटाचलमाहात्म्यम्, ८)अष्टाङ्ग योगसारः, ९)जलक्रीडाविलासः, १०) मुक्तिकान्ताविलासः, ११)तत्त्वकीर्तनानि, १२)वासिष्ठरामायणमिति। तत्तसन्निवेशेषु आशुपद्यानि, श्लोकाः, गानयोग्य रचनाश्च, अस्याः मुखादागताः।

गृहदैवभूतस्य श्री लक्ष्मीनृसिंहस्य वेङ्कटेश्वरस्य च अभेदभावनया अस्याः सर्वाः कृतयः वर्तन्ते। इयं स्वामिनः आलये एकान्तसेवासन्दर्भे नित्यमुक्तरात्रिक कैङ्कर्यं शाश्वततया निर्वाहयितुं समुचितायोजनानि कृतवती। ''तरिगोण्डवारिहारतिरिति'' नित्यं देवालये अन्ते अर्चकाः नीराजनः स्वामिनः समर्पयन्ति। एवमियं योगेश्वरी साहितीसेवां, श्री स्वामिकैङ्कर्यं, शिष्यतत्त्वोपदेशान् नित्यं निर्वहन्ती सहस्रचन्द्रदर्शनं कृत्वा १८१७ ईश्वरनामसंवत्सरे श्रावणमासे परमपदमलङ्कृतवती।

बाल्ये गुरुमुखतः विद्याभ्यासाभावेऽपि योगपाठेन अपूर्वसारस्वतशक्तिं सम्पाद्य वेङ्कटाचलमाहात्म्यामृत काव्यकवयित्री सती भक्तपोतनान्नामाचार्य मीराबायी समस्थाने गणनीया सती स्वामिनः कृपापात्रभक्तकवयित्री भूत्वा नित्यमद्यापि संस्तूयमाना वर्तते । वेङ्गमाम्बायाः कृतिषु वेङ्कटाचलमाहात्म्यपद्यकाव्यं वाशिष्टरामायणञ्च गणनीयप्रशस्त-साहित्यरत्ने भवतः।

(अनुवर्तिष्यते)

# उपकारस्य स्मरणम्

रामायणम् आदिकाव्यम्। रामायणस्य रचयिता वाल्मीकिः। श्रीरामस्य चरितम् अस्य ग्रन्थस्य विषयः। एषः प्रसङ्गः रामायणात्।

मारुतिः सीतायाः अन्वेषणार्थं लङ्कां प्रति उड्डयते। मार्गे महासागरः अस्ति। तस्य तले अवर्तत मैनाकः नाम पर्वतः। यदा मैनाकः गगने मारुतिं पश्यति तदा सः उद्गच्छति। समुद्रात् बहिः आयाति। मारुतिना क्रमणीयः मार्गः दीर्घः। मध्ये विश्रामार्थं स्थानमपि नास्ति इति मैनाकः जानाति। सः तस्य साहाय्यं कर्तुम् इच्छति। अतः मैनाकः मारुतिं प्रार्थयते, ''महाकपे! अलं परिश्रमेण, कृपया मम कूटे विश्रामं करोतु।''

किमर्थं मैनाकः मारुतेः साहाय्यार्थम् उद्युक्तः? अपि सः मारुतेः आशीर्वचनम् इच्छतिः न खलु। एतत् तु उपकारस्य स्मरणम्। मारुतेः तातः पवनदेवः साहाय्यार्थम् अकरोत् पुरा। तदा सर्वे पर्वताः , सपक्षाः। ते आकाशे स्वेच्छया विहरन्ति स्म, सहसा भूमौ निपतन्ति स्म। तेन त्रस्ताः ऋषयः इन्द्रम् उपागच्छन्। इन्द्रः पर्वतेभ्यः अकुप्यत्। सः वज्रेण पर्वतानां पक्षान् छेत्तुं प्रारभत। यदा इन्द्रः मैनाकं प्रति अगच्छत् तदैव पवनदेवः वेगेन तं समुद्रतलम् अनयत्। एवं पवनदेवः मैनाकं वज्रप्रहारात् अरक्षत्। मैनाकः पवनदेवस्य एतम् उपकारं स्मरति स्म। सः अचिन्तयत्, ''कृते च प्रतिकर्तव्यम् एष धर्मः सनातनः''। अतः मैनाकः पवनपुत्रस्य मारुतेः साहाय्यम् अकरोत्। मैनाकस्य आतिथ्येन मारुतिः प्रीतः। तथापि विश्रामम् अकृत्वा सः कार्यसिद्ध्यर्थम् अग्रे सरति।







# मङ्गलाशासनम्

01) श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम्।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम्॥

02) लक्ष्मी सविभ्रमालोकसुभ्रूविभ्रमचक्षुषे।
चक्षुषे सर्वलोकानां वेङ्कटेशाय मङ्गलम्॥

03) श्रीवेङ्कटाद्रिशङ्गाग्र मङ्गलाभारणाङ्घ्रये।
मङ्गलानां निवासाय वेङ्कटेशाय मङ्गलम्॥

04) सर्वावयवसौन्दर्यसम्पदा सर्वचेतसाम्।
सदा सम्मोहनायास्तु वेङ्कटेशाय मङ्गलम्॥

05) नित्याय निरवद्याय सत्यानन्दचिदात्मने।
सर्वान्तरात्मने श्रीमद्वेङ्कटेशाय मङ्गलम्॥

06) स्वतस्सर्वविदे सर्वशक्तये सर्वशेषिणे।
सुलभाय सुशीलाय वेङ्कटेशाय मङ्गलम्॥

07) परस्मै ब्रह्मणे पूर्णकामाय परमात्मने॥
प्रयुञ्जे परतत्त्वाय वेङ्कटेशाय मङ्गलम्।

08) आकालतत्त्वमश्रान्तमात्मनामनुपश्यताम्।
अतृप्त्यमृतरूपाय वेङ्कटेशाय मङ्गलम्॥

09) प्रायस्सवचरणौ पुंसां शरण्यत्वेन पाणिना।
कृपयाऽऽदिशते श्रीमद्वेङ्कटेशाय मङ्गलम्॥

10) दयामृततरङ्गिण्यास्तरङ्गैरिव शीतलैः।
अपाङ्गैः सिञ्चते विश्वं वेङ्कटेशाय मङ्गलम्।

11) स्रग्भूषाम्बरहेतीनां सुषमावहमूर्तये।
सर्वार्तिशमनायास्तु वेङ्कटेशाय मङ्गलम्॥

12) श्रीवैकुण्ठविरक्ताय स्वामिपुष्करिणीतटे।
रमया रममाणाय वेङ्कटेशाय मङ्गलम्॥

13) श्रीमत्सुन्दरजामातृमुनिमानसवासिने।
सर्वलोकनिवासाय श्रीनिवासाय मङ्गलम्॥

14) मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम्॥

॥इति श्री वेङ्कटेश मङ्गलाशासनम्॥



# आं.प्र. प्रभुत्वपक्षतः २०23 आगस्ट् मासे ति.ति. देवस्थानस्य नूतन पालकमण्डली अध्यक्षः, सदस्याः प्रतिज्ञां दत्तवन्तः



श्री बि.करुणाकररेड्डि
शासनसदस्यः,
ति.ति.दे.पालकमण्डली अध्यक्षः



श्री पोन्नाड वेङ्कट सतीष्कुमार्
शासनसदस्यः



श्री उदय भानु सामिनेनि
शासनसदस्यः



श्री एम्.तिप्पेस्वामी
शासनसदस्यः



श्री सिद्धवटं यानादय्य
शासनसदस्यः



श्री चण्डे आश्वर्थ नायक्
सदस्यः



श्री मेका शेषबाबु
सदस्यः



श्री आर्.वेङ्कटसुब्बारेड्डि
सदस्यः



श्री एल्लारेड्डि सीतारामिरेड्डि
सदस्यः



श्री गादिराजु वेङ्कट सुब्बराजु
सदस्यः



श्री पि.शरत्चन्द्रारेड्डि
सदस्यः



श्री राम्रेड्डि सामुल
सदस्यः



श्री बालसुब्रमणियन् पळनिस्वामी
सदस्यः

# ति.ति.देवस्थानस्य नूतन पालकमण्डली सदस्याः


श्री यस्.आर्.विश्वनाथरेड्डि
सदस्यः


श्रीमती गड्डं सीतारेड्डि
सदस्यः


श्री कृष्णमूर्ति वैद्यनाथन्
सदस्यः


श्री सिद्ध वेङ्कटसूधीर् कुमार्
सदस्यः


श्री सुदर्शन् वेणु
सदस्यः


श्री नेरुसु नागसत्यम्
सदस्यः


श्री आर्.वि.देश्पाण्डे
सदस्यः


श्री अमोल् काले
सदस्यः


डा॥ यस्.शङ्कर्
सदस्यः


श्री मिलिन्द केशव सर्वेकर्
सदस्यः


श्री केतन् देशाय्
सदस्यः


श्री बोरा सौरभ्
सदस्यः


श्री आर्.करिकालवळवन्, ऐ.ए.एस्.,
प्रभुत्व प्रत्येक प्रधान कार्यदर्शि रेविन्यू
देवादाय विभागः
एक्स् अफिषियो सदस्यः


श्री सत्यनारायण, ऐ.ए.एस्.,
कमीषनर् देवादाय विभागः (आं.प्र.)
एक्स् अफिषियो सदस्यः


श्री चेविरेड्डि मोहित् रेड्डि
तुडा चैर्मन् तिरुपति
एक्स् अफिषियो सदस्यः


श्री ए.वि.धर्मारेड्डि, ऐ.डि.ई.एस्.,
कार्यनिर्वहणाधिकारी
एक्स् अफिषियो सदस्यः





2023 आगष्ट् 27 दिनाङ्कु तः 29 दिनाङ्कु पर्यन्तम् आयोजित तिरुमल श्रीस्वामिनः पवित्रोत्सवः दृश्यानि। अस्मिन् कार्यक्रमे तिरुमल श्री श्री श्री पेद्दजीयर् स्वामी, श्री श्री श्री चिन्न जीयर् स्वामी, ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि ए.डि.ई.एस् दम्पत्यः भागं गृहीतवन्तः।



ति.ति.दे. पालकमण्डलि अध्यक्षः श्री भूमन करुणाकर रेड्डि महोदयः अद्यतनकाले तिरुमल वैकुण्ठं क्यूकाम्प्लेक्स्-२ मध्ये सामान्यभक्तः इव गत्वा सर्वदर्शनव्यवस्थापनं परिशीलन दृश्यम्।



ति.ति.दे. पालकमण्डलि अध्यक्षः श्री भूमन करुणाकर रेड्डि महोदयः सन्दर्शित स्थानिक आलय दृश्यम्। अस्मिन् कार्यक्रमे ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारी श्री वि. वीरब्रह्मम्, ऐ.ए.एस् भागं गृहीतवान्।




श्री वेङ्कटेश्वर सम्प्रदायशिल्पकळाशाला, ति.ति.देवस्थाने २०२३, सेप्टेम्बर् ४ तः ६ पर्यन्तम् आयोजित दिनत्रय कार्यशाला (वर्क्शाप्) दृश्यम्। अस्मिन् ति.ति.दे. पालकमण्डलि अध्यक्षः श्री भूमनकरुणाकर रेड्डि श्रीमति सदा भार्गवी ऐ.ए.एस्., तदितराः भागं गृहीतवन्तः।



ति.ति.दे. सम्युक्तकार्यनिर्वहणाधिकारी (हेच् &ई) श्रीमती सदा भार्गवी ऐ.ए.एस् अद्यतन काले कोटि हनुमान् चालीसा पारायण महायज्ञं रथयात्राम् आरब्धवती।

श्री न च रघुनाथाचार्यप्रणीता

# श्रीशेषाद्रीशस्तुतिः

## सुवर्णसौरभव्याख्यासमेता

व्याख्याता - डा. कन्दाल लक्ष्मीनारायणः - नेल्लूरु
चरवाणी - ९९८५२३७३५३

(तदनन्तरम्)

**भक्तिरेव स्तोतुं प्रेरयति -**

श्लो. २. स्तोतुं त्वां स चतुर्मुख स्स च महाभोगी त्रयी साऽप्यहो!
मूका एव भवन्ति शेषमहिभृत्स्वामिन्। गुणाम्भोनिधे।
एवं सत्यपि यन्मितम्पचमतिः स्तोत्रे तव स्तोकवाक्
सन्नह्यामि तदत्रहेतुरभवत् त्वत्पादभक्ति र्दृढा।।

ता - शेषाद्रिनिलय! श्रीनिवास प्रभो! त्वम् अनन्तकल्याणगुणानाम् आकरः। तव वैभवातिशयं वर्णयितुं सृष्टिकर्ता चतुर्मुखः, तथा सहस्रवदनश्शेषोऽपिनपारयतः। एवम् अनन्ता वेदाश्च भवतो गुणातिशयविवरणाय समर्थाः ना भूवन्। अतस्ते सर्वेऽपि मूकीभूता अभूवन्। स्वामिन्! एवं स्थितेऽल्पज्ञोऽल्पवचस्क श्चाहं भवन्तं स्तोतुं प्रयते। तत्र कारणं त्वच्चरणारविन्दयोः अत्यर्था भक्तिरेव सैव भवन्तं स्तोतुं मां प्रेरयति।

सु.सौ.व्याख्या - वक्ष्ये तनुवाग्विभवोऽपि सन् (रघु,१).इति महाकव्युक्तरीत्याऽत्रस्तुतिकारः भगवन्महिम्नोऽतिशयतां व्यञ्जयन् तद्वर्णने आत्मनो नैच्यानुसन्धानं करोति स्तोतुमित्यादिना -

गुणाम्भोनिधे - जलबिन्दूनां समुद्रो यथा निधिः तथैव कल्याणगुणानाम् आकरो भगवान् श्रीनिवासः तथा च श्रुतिः - ''कस्मात् उच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन् गुणाः -





इति। गुणानाम् आनन्त्यादेव तस्य ब्रह्मेति सार्थकम् नाम इति भावः। एवं छान्दोग्येऽपि मनोमयः प्राणशरीरो भारूप स्सत्यकाम स्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकाम स्सर्वगन्ध स्सर्वरस स्सर्वमिद मभ्यात्तोऽवा क्यनादरः - (३.१४.२) इति परब्रह्मणो नैके गुणाः श्रूयन्ते। उपबृंहणानि च ''समस्त कल्याणगुणात्मकोऽसौ - (श्री वि. पु ६.५.८४), ''बहवो नृप! कल्याणगुणाः पुत्रस्य सन्तिते (श्रीरामा.२.२.२६) इत्यदीनि बहूनि स्वमिनो गुणातिशयं विवृण्वन्ति। अभिज्ञा श्चैवम समस्तकल्याण गुणामृतोदधिः (स्तो.र.१८), आस्तां ते गुणराशिवत् गुणपरीवाहात्मनां जन्मनां सङ्ख्या (श्रीरङ्ग ३.७.४), केशव पादुकागुणमहाम्भोधे स्तरस्था वयम्' पादुका १३ इति भगवतो गुणपौष्कल्यम् अभ्यष्टुवन्।

चतुर्मुखः - चतुर्मुखो विरिञ्चः प्रलयानन्तरं परमात्मा ''तदैक्षत' (छा.६.२.३). इति स्वस्मात् सृष्टिसङ्कल्पं कृतवान्।तदा प्रथमतो जडभूतं पञ्चभूतादिकं सृष्ट्वा ततश्च जीवकोट्यां विधातारं सृष्टवान्। ततश्च 'तस्यां स चाम्भोरुह कर्णिकायाम् अवस्थितो लोक मपश्यमानः। परिक्रमन् व्योम्नि विवृत्तनेत्रः चत्वारि लेभेऽनुदिशं मुखानि।। (भाग.३.१८.१६). इत्युक्तरीत्या तस्य चत्वारि मुखानि अभूवन् । ततोऽपि तस्मै ज्ञानप्रदो भगवान् ''यो ब्रह्माणं विदधाति पूर्वम् यो वै वेदांश्च प्रहिणोति तस्मै (श्वेता - ६.१८). इत्युक्तरीत्या विज्ञान सर्वस्व भूतान् सकलानपि वेदान् उपदिदेश। स च चतुर्भिः मुखैः चतुर्णां वेदानाम् अध्ययनं नित्यं करोतीति प्रतीतिः। इत्थं विदितवेदितव्यस्य विधातुरपि शेषाद्रिपतेः श्रीपतेः वैभवातिशयो वक्तुमशक्य एवेति भावः। एवम् अत्र साभिप्रायोऽयं चतुर्मुखशब्दः।

महाभोगी - वैकुण्ठनाथस्य शय्याभूतः शेषः। महान् सहस्रशिरस्को भोगः फणा महाभोगः, सोऽस्यास्तीति महाभोगी, मतुबर्थे णिनिः। सहस्राननः इति तात्पर्यम्। अथवा, भोगोऽस्यास्तीति भोगी सर्पः। महां श्चासौ भोगी च महाभोगी। सर्पराज इति यावत्। अहं सर्वं करिष्यामि जाग्रत स्वपतश्च ते (श्रीरामा २.३१.२५) इत्युक्तरीत्या सर्वदा श्रीरामकैङ्कर्यसम्पन्न लक्ष्मणवत् हरेः अभिमतानुसारं निवासशय्याऽऽसनादिसकलविधसेवासु निरतत्वं शेषस्य महत्त्वम्। तथा च स्वस्य सहस्रवदनत्वेऽपि, कैङ्कर्यनिरतत्वेन सदा हरिसान्निध्येऽपि शेषो भगवन्महिमानं प्रवक्तुं न समर्थोऽभूदिति भावः।

**सा त्रयी अपि** - समस्त विज्ञान राशित्वेन प्रसिद्धेति तच्छब्दार्थः त्रयी वेदः। श्रुतिः स्त्री वेद आम्नाय स्त्रयी'' १.६.३. इत्यमरः। अनन्ता वै वेदाः' इति वेदानां बहुशाखात्ववम् उक्तम्। अथर्ववेदमपि परिगणय्य वेदस्य चतुष्टयत्वम् उक्तम् अभियुक्तैः। तदाह महाभाष्यकारः पस्पशाह्निके - ''चत्वारो वेदा स्साङ्गा स्सरहस्या बहुधा भिन्नाः। एकशतम् अध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यम्, नवधाऽथर्वणो वेदः इत्यादिना। एवम् एतावता पृथुपरिमाणेन वेदेनापि जगन्नाथस्य माहात्म्यम् इयत्तया परिमातुं न शक्यम् आसीत्। तदेतत् श्रुतं च तैत्तिरीये - ''यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'' इति।

परब्रह्मणो माहात्म्यं यो जानाति स एव तद्वक्तुं शक्नोति। परन्तु परन्तु परिच्छेदरहितं तत् न केनापि ज्ञातुं शक्यते। श्रुतं च केनेपनिषदि - ''यस्यामतं तस्य मतं मत यस्य न वेद सः' २.३. इति। तस्यायम् अर्थः यो ब्रह्मवेत्ता परं ब्रह्म अपरिच्छिन्नतया दुर्विज्ञेयं मनुते तेन तत् सम्यक् ज्ञातमेव। यस्तु मया तत् ज्ञातमिति मन्यते तेन ब्रह्मस्वरूपं न ज्ञातमिति मन्तव्यम् इति। तेन भगवन्महिम्नो दुर्विज्ञेयता सूचिता। तदेवोक्तं पराशरभट्टारकपादैः - अमतं मतं मतमथामतम् - (श्रीरङ्ग पू.१३) इत्यादिना। एवं परमात्मनो महत्त्वस्य अपरिच्छिन्नतया न केनापि स्तोतुं शक्यत इति तात्पर्यम्। अत्रेदं श्रीमदादित्य पुराणान्तर्गत श्रीवेङ्कटाचलमाहात्म्य वचनम् अनुसन्धेयम् -

(अनुवर्तिष्यते)



# दुर्गामातुः
# नवविध वैभवम्

- आचार्य जी. पद्मनाभम्

चरवाणी - ९२४७३२८२८६

राक्षस गुणोपरि दैवीगुणविजयचिह्नत्वेन नवरात्रि विजयदशमीत्युत्सवाः महावैभवोपेततया निर्वाह्यन्ते। मासस्यास्य पूर्णिमा अश्विनीनक्षत्र युक्तत्वात् आश्वयुजमासः इति नाम सार्थकं भवति। सनातन कालादारभ्य आश्वयुज मासस्य प्रामुख्यं वर्तते। पितृदेवता पूजाम् एवमन्यदेवता पूजाञ्च कृत्वा लोके जनाः विशेषाशीर्वादं प्राप्नुवन्ति। शरत्कालनवरात्रि पवित्र समये दुर्गामाता भूलोक भ्रमणं करोति। अत एव मासमिमं दुर्गामासमित्यपि व्यवहरन्ति। अस्मिन् मासे नवरात्रिषु दुर्गामातुरुपासनां शास्त्रोक्तरीत्या कृता चेत् मनोभीष्टं सिध्यतीति पुराणोक्तिः। भगवान् श्रीरामचन्द्रः अश्विनीमासे नवरात्रि पुण्यकाले दुर्गापूजां कृत्वा तस्याः आशीर्वादेन दशमे अहनि रावणासुरं जघान। नवरात्रिषु दुर्गामातुः भिन्न भिन्न रूपाराधना वैदिक परम्परानुसारम् आचर्यते। देव्याः नवरात्रिषु नवरूपाणि अस्त्रवाहनादीनि भिन्नान्यपि तानि, सर्वाणि आदिशक्तेः दुर्गायाः प्रतिरूपाण्येव। तस्याः अपारशक्तिवैभवमहत्त्वपूर्णान्येव।

**शैलपुत्री :** - दुर्गामातुः प्रथमशक्तिरूपं शैलपुत्री एव। नवरात्रिषु प्रथम दिने इमामेव भक्ताः उपासते। हिमवतः पुत्री शिवस्य अर्धाङ्गीयम्। शिवपुराणमनुसृत्य (सती देवी) दक्षपुत्री रूपे पितृकृत अवमानमसोढा योगाग्नौ भस्मी भूता। जन्मान्तरे हिमालय पुत्री भूत्वा तपसा शङ्करं पतिं प्राप्तवती। वृषभारूढा देवी ज्वलद्दक्षिण हस्ते त्रिशूलं, अन्यहस्ते कमलं धृतवती। प्रथम दिने मातुः पूजानन्तरं गोघृतसमर्पणात् माता प्रसन्ना भवति। मातृ कृपया उपासकशरीरेषु दिव्य चैतन्यं प्रविशति।

**२.ब्रह्मचारिणी :** - नवरात्रे द्वितीय दिने ब्रह्मचारिणी रूपां दुर्गा माराधयन्ति। ब्रह्मचारिणी रूपे देवी पार्वती भगवन्तं शङ्करं पतित्वेन प्राप्तुं घोरं तपः आचरति। अत एव ब्रह्मचारिणीति कथ्यते। ब्रह्मचारिणी नाम तपः कर्त्री। अस्याः दक्षिणहस्ते माला, वामहस्ते कमण्डलुः दृश्यते। अस्मिन् दिने मातुः शर्करायोगः दीयते। अस्याः उपासनया वैराग्य संयम भावनाः भक्तेषु उत्पद्यन्ते।

**३. चन्द्रघण्टा** - दुर्गायाः तृतीयशक्तिः चन्द्रघण्टारूपा। नवरात्रिषु दिने चन्द्रघण्टारूपां मातरं पूजयन्ति। मातुः मस्तके घण्टाकारः अर्धचन्द्रः वर्तते। अत एवास्मिन् देव्याः नाम चन्द्रघण्टेति। देवी सुवर्णवत् तेजोमयी भवति। मातुः दशसु हस्तेषु धनुः, बाणं, खड्गः, त्रिशूलं, गदा, हस्ते कमण्डलुः कमलमित्यादीनि विभूषणानि विराजन्ते। मातुः घण्टा-ध्वनिना नकारात्मकासुर शक्तयः पलायन्ते। अस्मिन् दिने पूजानन्तरं गोदधिमिश्रित मधुरपदार्थान् नैवेद्यरूपेण देव्यै समर्पयन्ति। भक्तानां सांसारिक क्लेशाः अनया पूजया विनश्यन्ति। मातृ कृपया योगसाधकस्य बहुसिद्धयः सिद्ध्यन्ति।

**४. कूष्माण्डा -** नवरात्रिषु चतुर्थदिने कूष्माण्डारूपं मातरं पूजयन्ति। यदा ब्रह्माण्डे सर्वत्र अन्धकारं व्याप्तं तदा माता स्वमनोहरहस्तद्वारा बीजरूपे ब्रह्माण्डं निर्मितवती।अत एव इयं कूष्माण्डेति व्यवहृता। अन्य कथामनुसृत्य मातुरस्याः कूष्माण्ड-बलिः अतिप्रियः।कूष्माण्डप्रियत्वकारणात् इयं कूष्माण्डेति व्यवहृतेति कथान्तरम्। इयम् अष्ट भुजा देवी। हस्तेषु, धनुर्बाण कमण्डलु-कमल-अमृतकलश-चक्र-गदायुधानि सुसज्जितानि भवन्ति। सर्वसिद्धिप्रदात्री जपमाला अस्याः अष्टमहस्ते विराजते। माता सूर्यमण्डलान्तर्गतलोके विद्यमानत्वात् सूर्यसमप्रकाश विशिष्टा भवति। मातुः स्थिर निष्ठापूजया सर्वव्याधि विमुक्ताः भवन्ति। पूजानन्तरं मालापुष्प भोगालङ्कृतां कुर्वन्ति। अपि च अस्याः पूजया बुद्धिविकासे विवेचन शक्तिः वर्धते।

**५. स्कन्दमाता -** नवरात्रिषु, पञ्चमदिने दुर्गामातुः पञ्चम शक्तिरूपा स्कन्दमाता। अस्मिन् दिने चत्वारः भुजाः भवन्ति। भुजद्वये कमलं विराजते। अन्य भुजद्वये वरद मुद्रारूपे वर्तते। मातेयं दक्षिण भुज द्वारा स्कन्दं स्वाङ्के स्थापयति। अत एव स्कन्दमातेति कथ्यते। स्कन्दमाता कमलासना वात्सल्यमूर्तिरूपा भवति। सन्तानार्थमिमां देवीं पूजयन्ति।

अस्मिन् दिने उपवासानन्तरं मातृपूजां विधाय भक्तितत्पराः अस्याः दर्शनं कुर्वन्ति । अस्याः कृपया मोक्षद्वारप्रवेशः निर्विघ्नः भवति ।

**६. कात्यायनी :-** नवरात्रिषु षष्ठदिने कात्यायनी देव्युपासना प्रवर्तते। कात्यायनऋषिः पुत्रिकासन्तान प्राप्त्यर्थं भगवत्याः उपासनां कठिनतपसा चकार। साक्षात् भगवती एव तद्गृहे जन्म लेभे। अत एवेयं देवी कात्यायनीति कथ्यते। सर्वेभ्यः पूर्वमेव एतन्मातृ पूजां कात्यायनः एव चकार। इयं चतुर्भुजा। एकः हस्तः वरदमुद्रायाम् अन्यः हस्तः अभयमुद्रायां वर्तते। तृतीय हस्ते खड्गं चतुर्थहस्ते कमलं धरति। अपार शक्तियुतेयं माता। कात्यायनी मातैव महिषासुरवधं चकार। द्वापर युगे गोपिकाः श्रीकृष्णं पतिं प्राप्तुं कात्यायनी पूजां चक्रुः। कात्यायनी पूजानन्तरम् अस्यै शर्करां समर्पयन्ति। अस्याः पूजया शत्रुभीति विमुक्ताः सन्तः सुखमयजीवनं यापयिष्यन्ति।

**७. कालरात्रिः -** दुर्गायाः सप्तम शक्तिः कालरात्रिः। नवरात्रिषु सप्तमदिने देवीमिमां पूजयन्ति। रौद्ररूपेयं रक्तबीजासुर संहारार्थम् इदं भयङ्कररूपं धृतवती। अस्याः शरीराकृतिः घनवत्काला भवति शिरः केशाः इतस्ततः व्याप्ताः भवन्ति। गोळाकार त्रिनेत्रयुतेयम्। अस्याः शरीरादग्निः प्रज्वलन् बहिरागच्छति। अस्याः वाहनं गार्दभः। इयमेकहस्तेन भक्तानामभयं ददाति। द्वितीय हस्तद्वारा वरं ददाति। उपरिहस्ते लोहनिर्मितमायुधं धरति। अधः हस्ते खड्गं धरति। अस्याः उपासनया ब्रह्माण्डद्वारं प्रवेशाय निराटङ्कं भवति।

अस्याः जपात् ब्रह्माण्डसिद्धयः साधकानां लभ्यन्ते। भयङ्कररूपीयं भक्तेभ्यः शुभप्रदात्री भवति। पूजानन्तरमस्यै गुडं समर्पयन्ति। एतन्मातृ भक्त्या समस्तासुर शक्तयः पलायन्ते। अतः अस्याः भक्ताः निर्भयाः भवन्ति।

**८. महागौरी -** नवरात्रिषु अष्टमदिने गौरीपूजां कुर्वन्ति। नामानुगुणं गौरवर्णशरीरधारिणी भवति। गौरीमाता जननसमये एव अष्टवर्षविशिष्टा आसीत्। अस्याः वस्त्राभरणानि श्वेतवर्ण विशिष्टानि। इयं चतुर्भजा। डमरुम् एकहस्ते, त्रिशूलमेकहस्ते धरति। एकः हस्तः अभयमुद्रायाम्, अन्यः हस्तः वरदमुद्रायां सन्दृश्यते। शिवं पतिं प्राप्तुं तपस्याचरणकाले अस्याः शरीरं कालवर्णं सञ्जातम् । परन्तु पश्चात् परमेश्वर कृपया गौरकान्तिमयी सञ्जाता। पूजायामस्याः नारिकेलफलं समर्पयन्ति। इयं नमस्कुर्वतां भक्तानां पापं दूरीकृत्य वाञ्छित फलं ददाति।

**९. सिद्धिदात्री :-** नवरात्रिषु नवमदिने सिद्धिदात्री रूपां देवीं पूजयन्ति। मोक्षसिद्धिप्रदात्रीति अस्याः सिद्धिदात्रीति नाम प्रख्यातम्। नवदुर्गासु इयमन्तिममाता। कमलासने विराजमानायाः अस्याः चत्वारः हस्ताः वर्तन्ते। हस्तेषु कमल, शङ्ख, गादाचक्राणि धरन्तीयम्। सरस्वतीप्रतिरूपेति च मन्यते। स्थिरनिष्ठया अस्याः उपासनया सर्वसिद्धयः सिध्यन्ति। भगवान् शङ्करोऽपि सिद्धिदात्रीकृपया सर्वसिद्धीरवापेति वदन्ति। नवमदिने सिद्धिदात्र्याः पूजानन्तरम् अस्यै तिलपिण्डानि समर्पयन्ति। अस्याः उपासनया नवदुर्गापूजाचरणं समाप्तं भवति। अस्याः कृपया दुःखविमुक्ताः लौकिक सर्वसुखानि प्राप्य परलोके मोक्षमपि प्राप्स्यन्ति।

### नवरात्रिपूजाचरणे वैज्ञानिकता

नवरात्रि पूजाचरणे धार्मिक दार्शनिकवैज्ञानिकदृष्टिरप्यस्ति। शरत्काले मानवाः रोगप्रतिरोधक शक्तिहीनाः भवन्ति। अतः रोगविमुक्तये, नियमपालनसात्त्विकाहारस्वीकरण उपवास व्रताचरणादीनि उत्तमोत्तमानि भवन्ति। नवरात्रिपूजाद्वारा हवन जपप्रार्थनादिभिः वातावरणशुद्ध्या साकं सकारात्मकशक्तिरपि जागृता भवति। सर्वेषां भक्त्या चित्तशुद्धिरपि भवति।

- ओं दुर्गामात्रे नमः -



चित्रकथा

# हा....जलमेव इति मा मन्यताम्

तेलुगुमूलम् -डा.कम्पेल्ल रविचन्द्रन्
चित्राणि - तुम्बलि शिवाजी
संस्कृतानुवादः - का. भास्करः
चरवाणी - ८१४३१५०८३३

एकवारं हेमाङ्गमहाराज समीपे एकः महर्षिः आगतवान्। राजा तस्य सकलोपचारान् अकरोत्।

हेमाङ्ग महाराज! भवन्तः सर्वदानानि कृतवन्तः। जलदानं विना...

महर्षे! सर्वत्र लभ्यमान जलं दानं करोमि चेत् किम् आगच्छति? दातुः किं फलं भवति?

सर्वदानानि कृत्वापि जल अदान कारणात् हेमाङ्गः मिथिला नगर महाराजस्य श्रुतकीर्तेः गृहे गृहगोधिका रूपेण जातः।



एकदा श्रुतदेवः इति नाम्ना महर्षिः श्रुतकीर्तेः मन्दिरमागतः राजा तस्य अर्घ्यपाद्यादीनि दत्वा सम्पूजितवान्।









हे महर्षे! सर्वदानानि कृत्वापि मम उत्तम गतयः न सम्प्राप्ताः। वारत्रयं चटक रूपं, एकवारं गृध्ररूपं, सप्तवारं शुनकरूपं धृत्वा इदानीम् अस्य रूपे अस्मि। मां त्रायस्व....


हे राजान्! भवान् वेङ्कटाचले जलदानं न कृतवान्। जलस्य मूल्यं नास्ति इति मत्वा भक्तानां जलं न दत्तवान्। तदर्थमेव एषा दुर्गतिः।


महात्मन् एतस्य तरुणोपायः नास्ति वा?
वेङ्कटाचले मया कृत पुण्यं तव पापशान्त्यर्थं दास्यामि। तदा तव प्रारब्धकर्म नश्यति।


महर्षेः अनुग्रहेण राज्ञः सकलपाप निवारणं जातम्।


महर्षे! तव अनुग्रहेण मम पापानि नाशिना। वेङ्कटाचलक्षेत्रे जलदानं करोति चेत् विष्णुलोक प्राप्तिः भविष्यति इति मम जीवनमेव भाविजनपरम्परायाः मार्गदर्शनं भवितुम् अनुग्रहं ददातु।


तथास्तु! न केवलं त्वमेव! वेङ्कटाचले सर्वैः स्वस्य शक्तिमनुसृत्य जलदानं करणीयम्।
स्वस्ति

प्रदत्तं चित्रपटम् बिन्दुसाहाय्येन पूरयामः वा?

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?

बा ल वि नो दि नी







## रसप्रश्नाः

१. शूरसेनस्य सुता का?

२. वसुषेणः, वैकर्तणः इति कस्य आपरनामनी?

३. नहुषस्य पुत्रः कः?

४.धौम्यः कस्य अनुजः?

५.सीता इति महर्षिः कस्य मन्वन्तरे भवति?

६.विनायकस्य वाहनं किम्?

(समाधानानि - १. सिन्धु २. कर्णस्य ३. ययातिः ४. देवलमहर्षेः ५. उत्तम ६. मूषकः)








(१. वामभागे दीपः नास्ति २. तालपत्रग्रन्थः नास्ति ३. पुस्तकं नास्ति ४.लघुदीपः नास्ति ५. मशिपात्रा नास्ति ६. लेखनी नास्ति ७. तोरणं नास्ति)



# लघुप्रश्नोत्तरी



तिरुमलतिरुपतिदेवस्थानानि

१५



ऐदंप्राथम्येन सप्तगिरिमासपत्रिकायां लघुप्रश्नोत्तरी इति स्पर्धाकार्यक्रमः आयोजितः
यत्र एतन्मासीयपत्रिकायां प्रकटितविषयाधारिताः प्रश्नाः भवेयुः। अतः हे बालबालिकाः!
प्रतिमासम् इमां पत्रिकां पठित्वा उत्तरदानप्रक्रियायां सक्रियं भागं वहन्ति खलु!

१. दीपिका इति उपनिषदोः व्याख्यानं कः अरचयत् ?
२. 'हिन्दोळ' उत्सवं कस्याः पूजायाः भागः भवति?
३. दक्षिण भारते द्रौपद्याः पूजा का भवति?
४. माण्डूक्योपनिषत् कस्य वेदस्य अन्तर्भागः?
५. सूरदासस्य गुरुः कः?
६. आदिशङ्करः शिवानन्दलहरी काव्यं कुत्र अरचयत्?
७. मानव शुल्बसूत्रं कस्य वेदे भवति?
८.ऐरावतेश्वरस्य देवालयः कुत्र अस्ति?
९. देवपुरोहितः कः?
१०. कर्णस्य देवालयः कुत्र भवति?
११. पुष्पकविमानस्य निर्माता कः?
१२. बलिचक्रवर्ती कुत्र भवति?
१३. नयनाराः कति सङ्ख्याकाः भवन्ति?
१४. गोकुलं विहाय नन्दगोपालकाः कुत्र गतवन्तः?
१५. जयद्रधः कस्य देशाधीशः?

| समाधानानि |
|---|
| १. |
| २. |
| ३. |
| ४. |
| ५. |
| ६. |
| ७. |
| ८. |
| ९. |
| १०. |
| ११. |
| १२. |
| १३. |
| १४. |
| १५. |

## नियमावालिः

१. केवलं १० तः १५ वर्षीयाः बालाः हैन्दवाः अत्र भागं ग्रहीतुमर्हन्ति।
२. बालाः पत्रिकापुटे प्रदत्तस्थले समानभाषायाम् एव उत्तरं विलिख्य तत्पत्रं The Chief Editor Office, Sapthagiri, T.T.D. Press Compound, K.T.Road, Tirupati 517507, प्रति २५ दिनाङ्कात् पूर्वं प्रेषयेयुः। प्रतिकृतीः (Xerox) नैव स्वीक्रियन्ते।
३. बालानां पितरौ मासपत्रिकाग्रहीतारः (Subsribers) भवेयुः। तत्र नाम, सङ्केतः, दूरवाणीसङ्ख्या च उत्तरपत्रिकायां देया एव।
४. समाधानेषु त्रुटयः, समीकरणानि च न भवेयुः।
५. सर्वेषां प्रश्नानां समीचीनसमाधानं दत्तवतां त्रयाणां बालानां चयनं DIP द्वारा क्रियते।
६. विजेतृणां नामानि अग्रिममासीय सप्तगिरि पत्रिकायां प्रचुरितानि भवन्ति।
७. Chief Editor कार्यालयीयकार्यकर्तृपुत्रपुत्रिकाणां च अत्र अवकाशो नास्ति।
८. अस्य कार्यक्रमस्य समाचारः दूरवाणीद्वारा नैव दीयते।
९. प्रश्नोत्तयाः उत्तराणि प्रेषयितुम् अन्तिमतिथिः २५.१०.२०२३ अस्ति।

Subscription Number :
Name :
Mother :
Father :
Address :
Phone Number :

Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.

## तिरुमलतिरुपतिदेवस्थानानि

२५-०८-२०२३ दिनाङ्के तिरुचानूरु श्री पद्मावती देव्याः आलय प्राङ्गणे आयोजित श्री वरलक्ष्मी व्रत दृश्याणि। अस्मिन् कार्यक्रमे ति.ति.दे. पालकण्डलि अध्यक्षः श्री बि.करुणाकररेड्डि दम्पत्यः, ति.ति.दे. सम्युक्त कार्यनिर्वहणाधिकारी (हेच् & ई) श्रीमती सदा भार्गवी, ऐ.ए.एस्., इत्यादयः भागं गृहीतवन्तः।










## तिरुमलतिरुपतिदेवस्थानानि

ति.ति.दे. प्रशासनभवनप्राङ्गणे आयोजित भारतस्वातन्त्र्यदिनोत्सव उत्सवाः (15-08-2023)। अस्मिन् सन्दर्भे श्री बि.करुणाकर रेड्डि महोदयः राष्ट्रीय ध्वजं उत्यापितवान्। एतेषाम् अतिरिक्तं ति.ति.दे. कार्यनिर्वहणाधिकारी श्री ए.वि.धर्मारेड्डि ऐ.डि.ई.एस्., महोदयः सुरक्षाकर्मचारिभ्यः अभिवादनम् स्वीकृतवान्।












SAPTHAGIRI (SANSKRIT) SPIRITUAL ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-09-2023 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023" LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP/04(4)/2021-2023" Posting on 5th of every month.

सर्वस्वरूपे सर्वेशे सर्वशक्ति समन्विते।
भयेभ्यस्त्राहि नो देवि! दुर्गे! देवि! नमोऽस्तुते॥

# देवीनवरात्रि उत्सवाः

2023 अक्टोबर् 15 तः 23 पर्यन्तम्